श्रीगुरुः चैत्र शुक्ल २० २५ श्रावार:
Murali Manohar Kambale
2.4.93
Kolhapur

॥ श्रीः ॥

# ॥ श्रीमृत्युंजयमानसिकपूजास्तोत्रम् ॥

14-5

कैलासे कमनीयरत्नखचिते कल्पद्रुमूले स्थितं
कर्पूरस्फटिकेन्दुसुन्दरतनुं कात्यायनीसेवितम् ।
गङ्गातुङ्गतरङ्गरञ्जितजटाभारं कृपासागरं
कण्ठालङ्कृतशेषभूषणममुं मृत्युञ्जयं भावये ॥ १ ॥

आगत्य मृत्युञ्जय चन्द्रमौले
व्याघ्राजिनालङ्कृत शूलपाणे ।
[illegible]
[illegible] र्वतीश ॥ २ ॥



[illegible] स्तम्भायुतालङ्कृते
सौधे धूपसुवासिते मणिमये माणिक्यदीपाञ्चिते ।
ब्रह्मेन्द्रामरयोगिपुङ्गवगणैर्युक्ते च कल्पद्रुमैः
श्रीमृत्युञ्जय सुस्थिरो भव विभो माणिक्यसिंहासने ॥

मन्दारमल्लीकरवीरमाधवीपुन्नागनीलोत्पलचम्पकान्वितैः ।
[illegible] रसुवासितैर्जलैराधत्स्व मृत्युञ्जय पाद्यमुत्तमम् ॥

सुगन्धिपुष्पप्रकरैः सुवासितैर्वियन्नदीशीतलवारिभिः शुभैः ।
त्रिलोकनाथार्तिहरार्घ्यमदराद्गृहाण मृत्युञ्जय सर्ववन्दित ॥

हिमाम्बुवासितैस्तोयैः शीतलैरतिपावनैः ।
मृत्युञ्जय महादेव शुद्धाचमनमाचर ॥ ६ ॥

गुडदधिसहितं मधुप्रकीर्णं सुघृतसमन्वितधेनुदुग्धयुक्तम् ।
शुभकर मधुपर्कमाहर त्वं त्रिनयन मृत्युहर त्रिलोकवन्द्य ॥

पञ्चास्त्रशान्त पञ्चास्य पञ्चपातकसंहर ।
पञ्चामृतस्नानमिदं कुरु मृत्युञ्जय प्रभो ॥ ८ ॥

जगत्त्रयीख्यात समस्ततीर्थसमाहृतैः कल्मषहारिभिश्च ।
स्नानं सुतोयैः समुदाचर त्वं मृत्युञ्जयानन्तगुणाभिराम ॥

आनीतेनातिशुभ्रेण कौशेयेनामरद्रुमात् ।
मार्जयामि जटाभारं शिव मृत्युञ्जय प्रभो ॥ ८ ॥

नानाहेमविचित्राणि चीरचीनाम्बराणि च ।
विविधानि च दिव्यानि मृत्युञ्जय सुधारय ॥ ११ ॥

विशुद्धमुक्ताफलजालरम्यं मनोहरं काञ्चनहेमसूत्रम् ।
यज्ञोपवीतं परमं पवित्रमाधत्स्व मृत्युञ्जय भक्तिगम्य ॥ १२ ॥

श्रीगन्धं घनसारकुङ्कुमयुतं कस्तूरिकापूरितं
कालेयेन हिमाम्बुना विरचितं मन्दारसंवासितम् ।
दिव्यं देवमनोहरं मणिमये पात्रे समारोपितं
सर्वाङ्गेषु विलेपयामि सततं मृत्युञ्जय श्रीविभो ॥ १३ ॥

अक्षतैर्धवलैर्दिव्यैः सम्यक्तिलसमन्वितैः ।
मृत्युञ्जय महादेव पूजयामि वृषध्वज ॥ १४ ॥

चम्पकपङ्कजकुरवककुन्दैः करवीरमल्लिकाकुसुमैः ।
विस्तारय निजमकुटं मृत्युञ्जय पुण्डरीकनयनाप्त ॥ १५ ॥

माणिक्यपादुकाद्वन्द्वे मौनिहृत्पद्ममन्दिरे ।
पादौ सत्पद्मसदृशौ मृत्युञ्जय निवेशय ॥ १६ ॥

माणिक्यकेयूरकिरीटहारैः काञ्चीमणिस्थापितकुण्डलैश्च ।
मञ्जीरमुख्याभरणैर्मनोज्ञैरङ्गानि मृत्युञ्जय भूषयामि ॥ १७ ॥

गजवदनस्कन्दधृतेनातिस्वच्छेन चामरयुगेन ।
गलदलकाननपद्मं मृत्युञ्जय भावयामि हृत्पद्मे ॥ १८ ॥

मुक्तातपत्रं शशिकोटिशुभ्रं शुभप्रदं काञ्चनदण्डयुक्तम् ।
माणिक्यसंस्थापितहेमकुम्भं सुरेश मृत्युञ्जय तेऽर्पयामि ॥



मणिमुकुरे निष्पटले त्रिजगद्गाढान्धकारसप्ताश्वे ।
कन्दर्पकोटिसदृशं मृत्युञ्जय पश्य वदनमात्मीयम् ॥ २० ॥

कर्पूरचूर्णं कपिलाज्यपूतं दास्यामि कालेयसमन्वितञ्च ।
समुद्भवं पावनगन्धधूपितं मृत्युञ्जयाङ्गं परिकल्पयामि ॥

वर्तित्रयोपेतमखण्डदीप्त्या तमो हरं बाह्यमथान्तरं च ।
साज्यं समस्तामरवर्गहृद्यं सुरेश मृत्युञ्जय वंशदीपम् ॥

राजान्नं मधुरान्वितं च मृदुलं माणिक्यपात्रे स्थितं
हिङ्गूजीरकसन्मरीचिमिलितैः शाकैरनेकैः शुभैः ।
शाकं सम्यगपूपसूपसहितं सद्योघृतेनाप्लुतं
श्रीमृत्युञ्जय पार्वतीप्रिय विभो सापोशनं भुज्यताम् ॥

कूश्माण्डवार्ताकपटोलिकानां फलानि रम्याणि च कारवल्ल्या ।
सुपाकयुक्तानि ससौरभाणि श्रीकण्ठ मृत्युञ्जय भक्षयेश ॥ २४ ॥

शीतलं मधुरं स्वच्छं पावनं वासितं लघु ।
मध्ये स्वीकुरु पानीयं शिव मृत्युञ्जय प्रभो ॥ २५ ॥

शर्करामिलितं स्निग्धं दुग्धान्नं गोघृतान्वितम् ।
कदलीफलसंमिश्रं भुज्यतां मृत्युसंहर ॥ २६ ॥

केवलमतिमाधुर्यं दुग्धैः स्निग्धैश्च शर्करामिलितैः ।
एलामरीचिमिलितं मृत्युञ्जय भुङ्क्ष्व परमान्नम् ॥ २७ ॥

रम्भाचूतकपित्थकण्टकफलैर्द्राक्षारसस्वादुम-
त्खर्जूरैर्मधुरेक्षुखण्डशकलैः सन्नारिकेलाम्बुभिः ।
कर्पूरेण सुवासितैर्गुडजलैर्माधुर्ययुक्तैर्विभो
श्रीमृत्युञ्जय पूरय त्रिभुवनाधारं विशालोदरम् ॥ २८ ॥

मनोज्ञरम्भानवखण्डखण्डितान्रुचिप्रदान्सर्षपजीरकांश्च ।
ससौरभान्सैन्धवसेवितांश्च गृहाण मृत्युञ्जय लोकवन्द्य ॥

हिङ्गूजीरकसहितं विमलामलकं कपित्थमतिमधुरम् ।
बिसखण्डाँल्लवणयुतान्मृत्युञ्जय तेऽर्पयामि जगदीश ॥ ३० ॥

एलाशुण्ठीसहितं दध्यन्नं चारुहेमपात्रस्थम् ।
अमृतप्रतिनिधिमाढ्यं मृत्युञ्जय भुज्यतां त्रिलोकेश ॥ ३१ ॥

जम्बीरनीराञ्चितशृङ्गबेरं मनोहरानम्लशलाटुखण्डान् ।
मृदूपदंशान्सहसोपभुङ्क्ष्व मृत्युञ्जय श्रीकरुणासमुद्र ॥

नागररामठयुक्तं सुललितजम्बीरनीरसंपूर्णम् ।
मथितं सैन्धवसहितं पिब हर मृत्युञ्जय क्रतुध्वंसिन् ॥

मन्दारहेमाम्बुजगन्धयुक्तैर्मन्दाकिनीनिर्मलपुण्यतोयैः ।
गृहाण मृत्युञ्जय पूर्णकाम श्रीमत्पराऽपोशनमभ्रकेश ॥

गगनधुनीविमलजलैर्मृत्युञ्जय पद्मरागपात्रगतैः ।
मृगमदचन्दनपूर्णैः प्रक्षालय चारु हस्तपदयुग्मम् ॥ ३५ ॥

पुन्नागमल्लिकाकुन्दवासितैर्जाह्नवीजलैः ।
मृत्युञ्जय महादेव पुनराचमनं कुरु ॥ ३६ ॥

मौक्तिकचूर्णसमेतैर्मृगमदघनसारवासितैः पूगैः ।
पर्णैः स्वर्णसमानैर्मृत्युञ्जय तेऽर्पयामि ताम्बूलम् ॥ ३७ ॥

नीराजनं निर्मलदीप्तिमद्भिर्दीपांकुरैरुज्ज्वलमुच्छ्रितैश्च ।
घण्टानिनादेन समर्पयामि मृत्युञ्जयाय त्रिपुरान्तकाय ॥

विरिञ्चिमुख्यामरवृन्दवन्दिते सरोजमत्स्याङ्कितचक्रचिह्निते ।
ददामि मृत्युञ्जय पादपङ्कजे फणीन्द्रभूषे पुनरर्घ्यमीश्वर ॥

पुन्नागनीलोत्पलकुन्दजाजीमन्दारमल्लीकरवीरपङ्कजैः ।
पुष्पाञ्जलिं बिल्वदलैस्तुलस्या मृत्युञ्जयाङ्घ्रौ विनिवेशयामि ॥

पदे पदे सर्वतमोनिकृन्तनं पदे पदे सर्वशुभप्रदायकम् ।
प्रदक्षिणं भक्तियुतेन चेतसा करोमि मृत्युञ्जय रक्ष रक्ष माम् ॥

नमो गौरीशाय स्फटिकधवलाङ्गाय च नमो
नमो लोकेशाय स्तुतविबुधलोकाय च नमः ।
नमः श्रीकण्ठाय क्षपितपुरदैत्याय च नमो
नमः फालाक्षाय स्मरमदविनाशाय च नमः ॥ ४२ ॥

संसारे जनितापरोगसहिते तापत्रयाक्रन्दिते
नित्यं पुत्रकलत्रवित्तविलसत्पाशैर्निबद्धं दृढम् ।
गर्वान्धं बहुपापवर्गसहितं कारुण्यदृष्ट्या विभो
श्रीमृत्युञ्जय पार्वतीप्रिय सदा मां पाहि सर्वेश्वर ॥ ४३ ॥

सौधे रत्नमये नवोत्पलदलाकीर्णे च तल्पान्तरे
कौशेयेन मनोहरेण धवलेनाच्छादिते सर्वशः ।
कर्पूराश्चितदीपदीप्तिमिलिते रम्योपधानद्वये
पार्वत्या करपद्मलालितपदं मृत्युञ्जयं भावये ॥

चतुश्चत्वारिंशद्विलसदुपचारैरभिमतै-
र्मनःपद्मे भक्त्या बहिरपि च पूजां शुभकरीम् ।
करोति प्रत्यूषे निशि दिवसमध्येऽपि च पुमा-
न्प्रयाति श्रीमृत्युञ्जयपदमनेकाद्भुतपदम् ॥ ४५ ॥

प्रातर्लिङ्गमुमापतेरहरहः संदर्शनात्स्वर्गदं
मध्याह्ने हयमेधतुल्यफलदं सायंतने मोक्षदम् ।

भानोरस्तमये प्रदोषसमये पञ्चाक्षराराधनं
तत्कालत्रयतुल्यमिष्टफलदं सद्योऽनवद्यं दृढम् ॥ ४६ ॥

श्रीमृत्युञ्जयमानसिकपूजास्तोत्रं संपूर्णम् ॥

—×—

॥ श्रीः ॥

# ॥ मृत्युञ्जयाष्टकम् ॥

—:*:—

रुद्रं पशुपतिं स्थाणुं नीलकण्ठमुमापतिम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ १ ॥

कालकण्ठं कालमूर्तिं कालाग्निं कालनाशनम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ २ ॥

अनन्तमव्ययं शान्तमक्षमालाधरं हरम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ३ ॥

आनन्दं परमं नित्यं कैवल्यपदकारणम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ४ ॥

देवदेवं जगन्नाथं देवेशं वृषभध्वजम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ५ ॥

स्वर्गापवर्गदातारं सृष्टिस्थित्यन्तकारणम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ६ ॥

गङ्गाधरं शशिधरं शङ्करं शूलपाणिनम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ७ ॥

भस्मोद्धूळितसर्वाङ्गं नागाभरणभूषितम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८ ॥

मार्कण्डेयकृतं स्तोत्रं यः पठेत् शिवसन्निधौ ।
तस्य मृत्युभयं नास्ति सत्यं सत्यं वदाम्यहम् ॥ ९ ॥

शिवेशान महादेव वामदेव सदाशिव ।
कल्पायुर्देहि मे पूर्णं यावदायुररोगताम् ॥ १० ॥

इति मार्कण्डेयकृतं मृत्युञ्जयाष्टकम् संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीचन्द्रशेखराष्टकम् ॥

—:*:—

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥

रत्नसानुशरासनं रजताद्रिशृङ्गनिकेतनं
शिञ्जिनीकृतपन्नगेश्वरमच्युतानलसायकम् ।
क्षिप्रदग्धपुरत्रयं त्रिदिवालयैरभिवन्दितं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

पञ्चपादपपुष्पगन्धपदाम्बुजद्वयशोभितं
फाललोचनजातपावकदग्धमन्मथविग्रहम् ।
भस्मदिग्धकळेबरं भवनाशनं भवमव्ययम्
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरं
पङ्कजासनपद्मलोचनपूजिताङ्घ्रिसरोरुहम् ।
देवसिन्धुतरङ्गशीकरसिक्तशुभ्रजटाधरं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

यक्षराजसखं भगाक्षिहरं भुजङ्गविभूषणं
शैलराजसुतापरिष्कृतचारुवामकलेबरम् ।
क्ष्वेळनीलगळं परश्वथधारिणं मृगधारिणं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

कुण्डलीकृतकुण्डलीश्वरमण्डलं वृषवाहनं
नारदादिमुनीश्वरस्तुतवैभवं भुवनेश्वरम् ।
अन्धकान्तकमाश्रितामरपादपं शमनान्तकं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

भेषजं भवरोगिणामखिलापदामपहारिणं
दक्षयज्ञविनाशनं त्रिगुणात्मकं त्रिविलोचनम् ।
भुक्तिमुक्तिफलप्रदं सकलाघसंघनिबर्हणं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

भक्तवत्सलमर्चितां निधिमक्षयं हरिदम्बरं
सर्वभूतपतिं परात्परमप्रमेयमनुत्तमम् ।
सोमवारिनभूहुताशनसोमपानिलखाकृतिं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

विश्वसृष्टिविधायिनं पुनरेव पालनतत्परं
संहरन्तमपि प्रपञ्चमशेषलोकनिवासिनम् ।

क्रीडयन्तमहर्निशं गणनाथयूथसमन्वितं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥

मृत्युभीतमृकण्डुसूनुकृतस्तवं शिवसन्निधौ
यत्र कुत्र च यः पठेत् न हि तस्य मृत्युभयं भवेत् ।
पूर्णमायुररोगतामखिलार्थसंपदमादरात्
चन्द्रशेखर एव तस्य ददाति मुक्तिमयत्नतः ॥

संसारसर्पदष्टानां जन्तूनामविवेकिनाम् ।
चन्द्रशेखरपादाब्जस्मरणं परमौषधम् ॥

इति चन्द्रशेखराष्टकम् संपूर्णम् ॥

---

॥ श्रीः ॥

# ॥ शिवमङ्गलाष्टकम् ॥

भवाय चन्द्रचूडाय निर्गुणाय गुणात्मने ।
कालकालाय रुद्राय नीलग्रीवाय मङ्गलम् ॥ १ ॥

वृषारूढाय भीमाय व्याघ्रचर्माम्बराय च ।
पशूनां पतये तुभ्यं गौरीकान्ताय मङ्गळम् ॥ २ ॥

भस्मोद्धूळितदेहाय व्याळयज्ञोपवीतिने ।
रुद्राक्षमालाभूषाय व्योमकेशाय मङ्गळम् ॥ ३ ॥

सूर्यचन्द्राग्निनेत्राय नमः कैलासवासिने ।
सच्चिदानन्दरूपाय प्रमथेशाय मङ्गळम् ॥ ४ ॥

मृत्युञ्जयाय साम्बाय सृष्टिस्थित्यन्तकारिणे ।
त्रियम्बकाय शान्ताय त्रिलोकेशाय मङ्गळम् ॥ ५ ॥

गङ्गाधराय सोमाय नमो हरिहरात्मने ।
उग्राय त्रिपुरघ्नाय वामदेवाय मङ्गळम् ॥ ६ ॥

सद्योजाताय शर्वाय दिव्यज्ञानप्रदायिने ।
ईशानाय नमस्तुभ्यं पञ्चवक्त्राय मङ्गळम् ॥ ७ ॥

सदाशिवस्वरूपाय नमस्तत्पुरुषाय च ।
अघोराय च घोराय महादेवाय मङ्गळम् ॥ ८ ॥

मङ्गळाष्टकमेतद्वै शम्भोर्यः कीर्तयेद्दिने ।
तस्य मृत्युभयं नास्ति रोगपीडाभयं तथा ॥ ९ ॥

इति शिवमङ्गळाष्टकम् संपूर्णम् ॥



॥ श्रीः ॥

# ॥ मृत्युसूक्तम् ॥

---

अपैतु मृत्युरमृतन्न आगन्वैवस्वतो नो अभयं कृणोतु ।
पर्णं वनस्पतेरिवाभिनश्शीयता ꣳ रयिस्सचतां नश्शचीपतिः ॥ परं
मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते
शृण्वते ते ब्रवीमि मानः प्रजा ꣳ रीरिषो मोतवीरान् ॥ वातं
प्राणं मनसाऽन्वारभामहे प्रजापतिं यो भुवनस्य गोपाः । स नो
मृत्योस्त्रायतां पात्व ꣳ हसो ज्योग्जीवा जरामशीमहि ॥ अमुत्र
भूयादधयद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः । प्रत्यौहतामश्विना
मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ हरि ꣳ हरन्तमनुयन्ति
देवा विश्वस्येशानं वृषभं मतीनाम् । ब्रह्म सरूपमनुमेदमागादयनं
मा विवधीर्विक्रमस्व ॥ शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् ।
उभयोर्लोकयोरृध्वाऽतिमृत्युं तराम्यहम् । मा छिदो मृत्यो
मावधीर्मामे बलं विवृहो मा प्रमोषीः । प्रजां मा मे रीरिष आयुरुग्र

नृचक्षसं त्वा हविषा विधेम। मा नो महान्तमुत मानो अर्भकं मान उक्षन्तमुतमानं उक्षितम्। मानोवधीः पितरं मोत मातरं प्रिया मानस्तनुवोरुद्ररीरिषः। मानस्तोके तनये मा न आयुषि मानो गोषु मा नो अश्वेषु रीरिषः। वीरान्मानोरुद्रभामितोवधीर् हविष्मन्तो नमसा विधेम ते। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वय स्याम पतयो रयीणाम्। स्वस्तिदाविशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। ये ते सहस्रमयुतं पाशा मृत्योमर्त्याय हन्तवे। तान् यज्ञस्य मायया सर्वानवयजामहे। मृत्यवे स्वाहा मृत्यवे स्वाहा॥

---



मुञ्चामि त्वा हविषा जीवनाय कमज्ञात यक्ष्मादुतराजयक्ष्मात्। ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम्। यदि क्षितायुर्यदिवा परेतो यदि मृत्योरन्तिकं नीत

एव । तमाहराम्नि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय । सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् । शतं यथेमं शरदो न यातीन्द्रो विश्वस्य दुरितस्य पारम् । शतं जीव शरदो वर्धमानश्शतं हेमन्तान् शतमु वसन्तान् । शतमिन्द्राग्नी सविता बृहस्पतिश्शतायुषा हविषेमं पुनर्दुः । आहार्षं त्वा विदं त्वा पुनरागाः पुनर्नव । सर्वाङ्ग सर्वं ते चक्षुस्सर्वमायुश्च तेविदम् ॥

---

शिवं शिवकरं शान्तं शिवात्मानं शिवोत्तमम् ।
शिवमार्गप्रणेतारं प्रणतोऽस्मि सदाशिवम् ॥

महादेवं महेशानं महेश्वरमुमापतिम् ।
महासेनगुरुं वन्दे महाभयनिवारणम् ॥

गौरीवल्लभ कामारे कालकूटविषाशन ।
मामुद्धरापदम्भोधेस्त्रिपुरघ्नान्तकान्तक ॥

मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय महादेवाय ते नमः ॥